एंतो वि ण सच्चविओ ५७६।२७८।२ [सरस्वतीकण्ठाभरणे (३, पृ. ३७२) उद्धृता]

आयन्नपि न सत्यापितो [=दृष्टो] यस्याः प्रसरत्पल्लवारुणरागः ।
मज्जनताम्रयोर्मदस्तथा मदताम्रयोर्लोचनयोरमर्षः ॥

एद्दहमित्तत्थणिया ५२।३८।२।१ [शृङ्गारप्रकाशे ७, पृ. २४५ उद्धृता]

एतावन्मात्रस्तनिका एतावन्मात्राभ्यामक्षिपत्राभ्याम् ।
एतदवस्थां प्राप्ता एतावन्मात्रैर्दिवसैः ॥

कस्स व न होइ २५।२८।२।१ [सप्तशतक ८८६]

कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।
सभ्रमरपद्माघ्राणशीले वारितवामे सहस्वेदानीम् ॥

कायं खायइ २५६।१४८।२०।३ [सरस्वतीकण्ठाभरणे (१.२३-३०) उद्धृता]

काकं खादति क्षुधितः कूरं क्षिपति निर्भरं रुष्टः ।
शुनकं गृह्णाति कण्ठे निषेधति [=भेषयति] च नप्तारं स्थविरः ॥

काराविऊण खउरं ३८२।१९४।१६।३ [सरस्वतीकण्ठाभरणे] (१.४८.५५) उद्धृता]

कारयित्वा क्षौरं ग्राममुख्यः मज्जित्वा जिमित्वा ।
नक्षत्रं तिथिवारौ ज्यौतिषिकं प्रष्टुं चलितः ॥

का विसमा ६५४।३०४।१६।६ [सप्तशतक ९७५]

का विषमा दैवगतिः किं लष्टं [=सुन्दरं] यद् जनो गुणग्राही ।
किं सौख्यं सुकलत्रं किं दुर्ग्राह्यं खलो लोकः ॥

कुलबालियाए ६९६।३२४।१३।७ [सप्तशतक ८७१]

कुलबालिकायाः प्रेक्षध्वं यौवनलावण्यविभ्रमविलासाः ।
प्रवसन्तीव प्रोषिते आयन्तीव गृहमायति ॥

गाढालिंगण० ७५।४८।२।१ [सप्तशतक ९३४]

गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति ।
मनस्विनीनां मानः पीडनभीत इव हृदयात् ॥

गुरुयणपरवस ३४।३२।८।१ [सप्तशतक ८५१]

गुरुजनपरवश प्रिय किं भणामि तव मन्दभागिन्यहम् ।
अद्य प्रवासं व्रजसि व्रज स्वयमेव शृणोषि [=श्रोष्यसि] करणीयम् ॥

चन्दमऊएहिं ५५५।२६८।२१।६ [ध्वन्यालोके (२, पृ. २५९) उद्धृता]

चन्द्रमयूखैर्निशा नलिनी कमलैः कुसुमगुच्छैर्लता ।
हंसैः शरच्छोभा काव्यकथा सज्जनैः क्रियते गुर्वी ॥

चूयंकुरावयंसं ७४।४६।२३।१ [हरिविजये; ध्वन्यालोके (पृ. २९८) उद्धृता]

चूताङ्कुरावतंसं क्षणप्रसरमहार्घमनोहरसुरामोदम् ।
असमर्पितमपि गृहीतं कुसुमशरेण मधुमासलक्ष्म्या मखम् ॥

जं जं करेसि ७२७।३४०।२४।७ [गाथासप्तशती ४.७८; सप्तशतक ३७८]

यद् यत् करोषि यद् यच्च जल्पसि यथा त्वं निवससि ।
तत्तदनुशिक्षणशीलायां दिवसो दिवसो न संपतति ॥

जं भणह तं ६६१।३०६।१४।६ [सप्तशतक ८९७]

यद् भणथ तत् सख्य आम करिष्यामि तत् तथा सर्वम् ।
यदि तरथ [=शक्नुथ] रोद्धुं मे धैर्यं संमुखागते तस्मिन् ॥

जस्स रणंतेउरए ५४२।२६४।१४।६ [काव्यप्रकाशे (१०.४२२) उद्धृता]

यस्य रणान्तःपुरे करे कुर्वतो मण्डलाग्रलताम् ।
रससंमुख्यपि सहसा पराङ्मुखी भवति रिपुसेना ॥

जो तीए अहर० ६३५।२९८।३।६ [गाथासप्तशती २.६; सप्तशतक १०६]

यस्तस्या अधररागो रात्रिमुद्वासितः [रात्रावुद्वासितः] प्रियतमेन ।
स एव दृश्यते प्रातः सपत्नीनयनेषु संक्रान्तः ॥

ढंढुल्लिंतु मरीहसि ५०१।२५२।२७।६; ५१७।२५६।५।६ [काव्यप्रकाशे (१०.४०७) उद्धृता]

(१) गवेषयन् मरिष्यसि कण्टककलितानि केतकीवनानि ।
मालतीकुसुमेन समं भ्रमर भ्राम्यन् न प्राप्स्यसि ॥
(२) मालतीकुसुमसदृशं ,, ,, ,,

णहमुहपसाहिंअंगो २४।२६।२०।१ [सप्तशतक ९३७]

नखमुखप्रसाधिताङ्गो निद्राघूर्णल्लोचनो न तथा ।
यथा निर्व्रणाधरः श्यामलाङ्ग दुनोषि मम हृदयम् ॥

णोल्लेइ अणोल्लमणा ३१।३०।२४।१ [सप्तशतक ८७५]

नुदत्यनार्द्रमना अत्ता [श्वश्रूः] मा गृहभरे सकले ।
क्षणमात्रं यदि सन्ध्यायां भवति न वा भवति विश्रामः ॥

तं ताण सिरि० ७०।४४।२४।१ [विषमबाणलीलायाम्; ध्वन्यालोके (पृ. २६५) उद्धृता]

तत्तेषां श्रीसहोदररत्नाहरणे हृदयमेकरसम् ।
बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन ॥

ताला जायंति गुणा २३७।१४२।१२।३ [विषमबाणलीलायाम्; ध्वन्यालोके (पृ. १७०) उद्धृता]

तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते ।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥ [सप्तशतक ९८९]

तुह वल्लहस्स गोसम्मि ७६।४८।६।१ [सप्तशतक ९९०; काव्यप्रकाशे (४.८३) उद्धृता]

तव वल्लभस्य प्रातरासीदधरो म्लानकमलदलम् ।
इति नववधूः श्रुत्वा करोति वदनं महीसंमुखम् ॥

दे आ पसिअ २।२६।९।१ [सप्तशतक ९६८; शृङ्गारप्रकाशे (७, पृ. २४८) उद्धृता]

अयि आः प्रसीद निवर्तस्व मुखशशिज्योत्स्नाविलुप्ततमोनिवहे ।
अभिसारिकाणां विघ्नं करोष्यन्यासामपि हताशे ॥

धवलोसि जइ ६१०।२८८।१०।६ [सप्तशतक ६६७; गाथासप्तशती ७.६५]

धवलोऽसि यद्यपि सुन्दर तथापि त्वया मम रक्षितं हृदयम् ।
रागभृतेऽपि हृदये सुभग निहितो न रक्तोऽसि ॥

धीराण रमइ ७२।४६।१०।१ [ध्वन्यालोके (२, पृ. २६२) उद्धृता]

धीराणां रमते घुसृणारुणे न तथा प्रियास्तनोत्संगे ।
दृष्टी रिपुगजकुम्भस्थले यथा बहलसिन्दूरे ॥

नियदइय० १९।२४।२१।१ [सप्तशतक ९५७]

निजदयितादर्शनोत्क्षिप्त पथिकान्येन व्रज पथा ।
गृहपतिदुहिता दुर्लङ्घ्यवागुरेह हतग्रामे ॥

निग्गंडदुरारोहं ६७०।३१०।६।६ [सप्तशतक ४६८; गाथासप्तशती ५.६८]

निर्गण्डदुरारोहां मा पुत्रक पाटलां समारोह ।
आरूढनिपतिता केऽनया न कृता इह ग्रामे ॥

निहुयरमणम्मि १८८।११८।२३।३ [सप्तशतक ९८७]

निभृतरमणे लोचनपथे पतिते गुरूणां मध्ये ।
सकलपरिहारहृदया वनगमनमेव काङ्क्षति वधूः ॥

पणयकुवियाण १०५।६६।२।२ [गाथासप्तशती १.२७; सप्तशतक २७]

प्रणयकुपितयोर्द्वयोरप्यलीकप्रसुप्तयोर्मानवतोः ।
निश्चलनिरुद्धानिः श्वासदत्तकर्णयोः को मल्लः ॥

पत्तनिअम्ब० २४५।१४४।१८।३ [गाथासप्तशती ६.५५; सप्तशतक ५५६]

प्राप्तनितम्बस्पर्शाः स्नानोत्तीर्णायाः श्यामलाङ्ग्याः ।
चिकुरा रुदन्ति जलबिन्दुभिर्बन्धस्येव भयेन ॥

पंथिय न एत्थ ५९।४०।७।१ [सप्तशतक ८७९]

पथिक नात्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे ।
उन्नतपयोधरं [पक्षे पयोधरा] प्रेक्ष्य यदि वससि तद् वस ॥

पोढमहिलाण जं ६५९।३०६।४।६ [सरस्वतीकण्ठाभरणे (३.२३, ५६) उद्धृता]

प्रौढमहिलानां यत् सुष्ठु शिक्षितं तद् रते सुखयति ।
यद्यदशिक्षितं नववधूनां तत्तद् धृतिं ददाति ॥

फुल्लुकरं २९०।१६२।६।३ [कर्पूरमञ्जरी १.१९]

पुष्पोत्करं कलमौदनसमं वहन्ति ये सिन्धुवारविटपा मम वल्लभास्ते ।
ये गालितस्य महिषीदध्नः सदृशास्ते किमपि मुग्धविचकिलप्रसूनपुञ्जाः ॥

बहलतमा हयराई १५।२२।१४।१ [गाथासप्तशती ४.३५; सप्तशतक ३३५]

बहुलतमा हतरात्रिरद्य प्रोषितः पतिर्गृहं शून्यम् ।
तथा जागृहि प्रतिवेशिन् न यथा वयं मुष्यामहे ॥

भम धम्मिअ १३।२२।१२।१ [गाथासप्तशती २.७५; सप्तशतक १७५]

भ्रम धार्मिक विश्वस्तः स शुनकोऽद्य मारितस्तेन ।
गोदानदीकच्छनिकुञ्जवासिना दृप्तसिंहेन ॥

महिलासहस्स० १७८।११२।४।२ [गाथासप्तशती २.८२; सप्तशतक १८२]

महिलासहस्रभृते तव हृदये सुभग सा अमान्ती ।
अनुदिनमनन्यकर्माऽङ्गं तनुकमपि तनयति ॥

महुएहिं १७।२४।९।१ [सप्तशतक ८७७; वज्जालग्ग ४९१]

मधूकैः किंवा पथिक यदि हरसि निवसनं नितम्बात् ।
कथयामि कस्यारण्ये ग्रामो दूऽहमेकाकिनी ॥

मा पंथं ८२।५०।१२।१ [वज्जालग्ग ४९१; सप्तशतक ९६१]

मा पन्थानं रुधः मम अपेहि बालक [=अप्रौढ] अहो असि अह्रीकः ।
वयं परतन्त्राः शून्यगृहं रक्षितव्यमस्माकम् ॥

रइकेलिहिय० ९२।५४।१०।१ [गाथासप्तशती ५.५५; सप्तशतक ४५५]

रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य ।
रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति ॥

वच्च महं चिय २३।२६।१४।१ [सप्तशतक ९४४]

व्रज ममैवैकस्या भवन्तु निःश्वासरोदितव्यानि ।
मा तवापि तया विना दाक्षिण्यहतस्य जायन्ताम् ॥

वाणियय हत्थिदंता ३७।३४।४।१; ६६०।३०६।२१।६ [सप्तशतक ९५१; ध्वन्यालोके (पृ. २९९) उद्धृता]

वाणिजक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयः ।
यावद् विलुलितालकमुखी गृहे परिष्वष्कते स्नुषा ॥

वाणीरकुडंगुड्डीण० १७२।१०८।२७।२ [सप्तशतक ८७४; ध्वन्यालोके (पृ. ८२) उद्धृता]

वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वत्याः ।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥

सग्गं अपारिआयं ५६४।२७२।७।६ [सेतुबन्ध ४.२०]

स्वर्गमपारिजातं कौस्तुभलक्ष्मीविरहितं मधुमथस्थेरः।
स्मरामि मथनपुरतोऽमुग्धचन्द्रं च हरजटाप्राग्भारम् ॥

सणिअं वच्च किसोयरि २१।२६।४।१ [शृङ्गारप्रकाशे (प्र. ७, पृ. २४८) उद्धृता]

शनैः व्रज कृशोदरि ! पदे प्रयत्नेन स्थापय महीपृष्ठे ।
भङ्क्ष्यसि विस्तृतस्तनि ! विधिना दुःखेन निर्मापिता [=निर्मिता] ॥

सालोए च्चिय ७१५।३३२।१४।७ [गाथासप्तशती २.३०; सप्तशतक १३०]

सालोके एव सूर्ये गृहिणी गृहस्वामिकस्य गृहीत्वा ।
अनिच्छतश्च चरणौ धावति हसन्ती हसतः ॥

साहं[हं]ती सहि ३६।३२।२४।१ [सप्तशतक ८६०]

कथयन्ती सखि सुभगं क्षणे क्षणे दूनाऽसि मम कृते ।
सद्भावस्नेहकरणीयसदृशं तावद् विरचितं त्वया ॥

सिहिपिच्छकण्णऊरा ७२९।३४०।११।७ [गाथासप्तशती २.७३; सप्तशतक १७३]

शिखिपिच्छकर्णपूरा जाया व्याधस्य गर्ववती भ्रमति ।
मुक्ताफलरचितप्रसाधनानां मध्ये सपत्नीनाम् ॥

सुव्वइ समागमिस्सइ ३२।३०।२९।१ [सप्तशतक ९६२; काव्यप्रकाशे (३.१९). उद्धृता]

श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण ।
एवमेव किमिति तिष्ठसि तत् सखि सज्जय करणीयम् ॥

सो नत्थि एत्थ ६६५।३०८।१२।६ [सप्तशतक ९९७; काव्यप्रकाशे (१०.५६९) उद्धृता]

सो नास्त्यत्र ग्रामे य एतां स्फुरल्लावण्याम् ।
तरुणानां हृदयलुण्टाकीं परिष्वष्कमाणां निवारयति ॥

सोह व्व लक्खणमुहं ५२१।२५६।२७।६ [सेतुबन्ध १.४८]

शोभेव लक्ष्मणमुखं वनमालेव विकटं हरिपतेरुरः ।
कीर्तिरिव पवनतनयमाज्ञेव बलान्यस्य अवलगति दृष्टिः ॥

हंसाण सरेहिं ५५८।२७०।७।६ [सप्तशतक ९५३; काव्यप्रकाशे (१०.५२७) उद्धृता]

हंसानां सरोभिः श्रीः सार्यतेऽथ सरसां हंसैः ।
अन्योन्यमेवैते आत्मानं केवलं गुरुकयन्ति [=गुरूकुर्वन्ति]

होइ न गुणाणुराओ ५४८।२६६।१८।६ [लोचने (१, पृ. १२३) उद्धृता]

भवति न गुणानुरागो जडानां केवलं प्रसिद्धिशरणानाम् ।
किल प्रस्नौति शशिमणिश्चन्द्रे न प्रियामुखे दृष्टे ॥

# પરિશિષ્ટ-૪

## अकारादिक्रमेण सूत्राणामनुक्रमणी*

[ अध्याय/सूत्र/संख्यानिर्देशः । ]



* આગળનો આંકડો સળંગ સૂત્ર સંખ્યા સૂચવે છે.

१४९) क्षोभेऽप्यनुल्बणत्वं माधुर्यम् । ७, ६
१७२) गणिका सामान्या । ७, २९
२०४) गद्यपद्यमयी साङ्का सोच्छ्‌वासा चम्पूः । ८, ९
१८१) गर्वादल्पाकल्पन्यासः शोभाकृद्विच्छित्तिः । ७, ३८
१५५) गूढगर्वः स्थिरो धीरः क्षमावानाविकत्थनो महासत्त्वो दृढव्रतो धीरोदात्तः । ७, १२
१६२) गूढापराधः शठः । ७, १९
१९९) गेयं डोम्बिकाभाणप्रस्थानशिंगकभाणिकाप्रेरणरामाक्रीडहल्लीसकरासकगोष्ठीश्रीगदितरागकाव्यादि । ८, ४
७३) ग्रहादेरपस्मारः कम्पादिकृत् । २, ४७
१९२) चेष्टामसृणत्वं माधुर्यम् । ७, ४९
६३) चौर्यादेरौग्र्यं वधादिकृत् । २, ३७
१५९) ज्येष्ठायामपि सहृदयो दक्षिणः । ७, १६
४६) ज्ञानादेर्धृतिरव्यग्रभोगकृत् । २, २०
९८) तत्र निजान्त्याक्रान्ता अटवर्गा वर्गा ह्रस्वान्तरितौ रणावसमासो मृदुरचना च । ४, ४
तत्परत्वे काले ग्रहत्यागयोर्नातिनिर्वाहे निर्वाहेऽप्यङ्गत्वे रसोपकारिणः । १, १४
१०७) तत्पादे भागे वा । ५, ४
१६४) तद्गुणा स्वपरसामान्या नायिकाऽपि त्रेधा । ७, २१
१०५) तात्पर्यमात्रभेदिनो नाम्नः पदस्य वा लाटानाम् । ५, २
१४६) दाक्ष्यशौर्योत्साहनचजुगुप्सोत्तमस्पर्धागमिका शोभा । ७, ३
३८) दारापहारादिविभावो नयनरागाद्यनुभाव औग्र्यादिव्यभिचारी क्रोधो रौद्रः । २, १३
७०) दारिद्र्यादेश्चिन्ता संतापादिकृत् । २, ४४
४२) दिव्यदर्शनादिविभावो नयनविस्ताराद्यनुभावो हर्षादिव्यभिचारी विस्मयोऽद्भुतः । २, १६
९९) दीप्तिहेतुरोजो वीरबीभत्सरौद्रेषु क्रमेणाधिकम् । ४,५
३१) दैवपारवश्याभ्यामाद्यो द्वेधा । २,६
६६) दौर्गत्यादेर्दैन्यममृजादिकृत् । २, ४०
९६) द्रुतिहेतुमाधुर्यं शृङ्गारे । ४, २
२०३) धीरशान्तनायका गद्येन पद्येन वा सर्वभाषा कथा । ८, ८
१६७) धीराधीराधीराऽधीराभेदादन्त्ये त्रेधा । ७, २४
१४७) धीरे गतिदृष्टी सस्मितं वचो विलासः । ७, ४

# પરિશિષ્ટ-૫

## ग्रन्थकारेण निर्दिष्टानां ग्रन्थानां ग्रन्थकृतां चाकाराद्यनुक्रमणी

[ पृष्ठ/पङ्क्तिसंख्यानिर्देशः ]



---

* પૃષ્ઠસંખ્યા / પંક્તિસંખ્યા

## Our latest Publications (2000)

| | |
|---|---|
| Some Topics in the Development of OIA, MIA, NIA (Dr. H. C. Bhayani (1998) | 75-00 |
| Anantanāha Jina Cariyaṁ (Pt. Rupendrakumar Pagariya (1998) | 400-00 |
| Alankāradappana (Dr. H. C. Bhayani) (1999) | 50-00 |
| Aṣṭaka Prakaraṇa (Dr. K. K. Dixit) (1999) | 75-00 |
| Siri Candappahasāmi Cariyaṁ (Pt. Rupendrakumar Pagariya) (1999) | 250-00 |
| Tattvārtha Sūtra (English) With Pt. Sukhlalji's Commentary (reprint) | 300-00 |

## SAMBODHI

| | |
|---|---|
| The Journal of the L. D. Institute of Indology : (Back Vol. 1-21) Per Vol. | 100-00 |
| Current Vol. 22 (1999-2000) | 150-00 |

## Our Forthcoming Publications

Tarka-Taranginī

ડૉ. મો. દ. દેસાઈ સંપાદિત પ્રાચીન કૃતિઓ

Śāstravārtā samuccaya

Saptapadārthi